॥ श्रीनारायणभट्टपादविरचिता श्रीपादसप्ततिः ॥

दक्षाधःकरपल्लवे लसदसिं दक्षोर्ध्वगे शूलिनीं
वामोर्ध्वे फलकोज्ज्वलां कटितटन्यस्तान्यहस्ताम्बुजाम् ।
शूलाग्राहतकासरासुरशिरोनिष्ठां प्रहृष्टां सुरैर्-
जुष्टामिष्टफलप्रदां भगवतीं मुक्तिस्थलस्थां भजे ॥ १॥

यत्संवाहनलोभिनः शशिकलाचूडस्य हस्ताम्बुज-
स्पर्शेनापि च लोहितायति मुहुस्त्वत्पादपङ्केरुहम् ।
तेनैवोद्धतकासरासुरशिरश्शृङ्गाग्रसञ्चूर्णन-
प्राचण्ड्यं तदनुष्ठितं किल कथं मुक्तिस्थलस्थे! शिवे! ॥ २॥

त्वत्पादं निजमस्तके घटयितुं के के नु लोके जनाः
किं किं नारचयन्ति दुश्चरतपश्चर्यासपर्यादिकम् ।
मन्ये धन्यतमं तु देवि! महिषं वैरस्थयैव त्वया
यन्मूर्ध्नि स्वयमेव पातकहरं पादाम्बुजं पातितम् ॥ ३॥

त्वत्पादाम्बुजमर्पितं क्व नु शिवे! किन्नु त्रयीमस्तके?
नित्यं तत्त्वविचारदत्तमनसां चित्ताम्बुजाग्रेषु वा? ।
किं वा त्वत्प्रणयप्रकोपविनमन्मारारिमौलिस्थले?
किं प्रोत्खण्डितघोरसैरिभमहादैत्येन्द्रमूर्द्धान्तरे? ॥ ४॥

त्वत्पादाञ्चलरूपकल्पलतिकाबालप्रवालद्वयं
ये तावत्कलयन्ति जातु शिरसा नम्रेण कम्रोज्ज्वलम् ।
तेषामेव हि देवि! नन्दनवनक्रीडासु लभ्यं पुनः
स्वर्वल्लीतरुणप्रवालभरणं सेवानुरूपं फलम् ॥ ५॥

धावल्यं परिलाल्यते पुररिपोरङ्गेन तुङ्गश्रीया
किञ्च श्यामलिमापि कोमलतरे भात्येव गात्रे हरेः ।
तत्तादृक्पदवीं ममापि जनयेत्यस्तोकसेवारसा-
दारुण्यं तव लीयते चरणयोः कारुण्यमूर्ते! शिवे! ॥ ६॥

आरुण्यं यदिदं त्वदीयपदयोराभाति, तत्केचन
प्राहुस्तुङ्गनितम्बभारभरणक्लान्त्या किलोपागतम् ।
अन्ये माहिषमूर्द्धपेषमिलितं रक्तद्रवं मन्वते
मन्येऽहं तु नतेषु सान्द्रमनुरागोद्गारमेवानयोः ॥ ७॥

प्राहुः पद्मसमाश्रयं शतधृतिं त्वत्पादपद्माश्रया-

दन्तस्त्वत्पदपद्मवीक्षणवशात्कृष्णो।पि पद्मेक्षणः ।
यत्पद्मार्चनमामनन्ति सुधियो दारिद्र्यविद्रावणं
मुक्तिक्षेत्रगते! भवानि! तदपि त्वत्पादपद्मार्चनम् ॥ ८॥

पादं ते सरसीरुहद्रुहमिमं यत्सेवते पद्मभू-
र्नूनं तत्स्वनिवासपङ्कजवरश्रीलङ्घनाशङ्कया ।
गोविन्दोऽपि च वारिराशिदुहितुर्वासाब्जबाधाभिया
स्वस्यैवाग्रकरोद्गृहीतकमलत्राणाभिलाषेण वा ॥ ९॥

सेवन्ते कुलसम्पदे नखमयाः शीतांशवस्त्वत्पदं
तत्पाको ननु वीक्ष्यते हि नितरामन्येषु शीतांशुषु ।
एको बालक एव मौलिमयि! ते यातो, ललाटात्मता-
मन्यो निर्मलमण्डलदशामन्यौ तु धन्यौ गतौ ॥ १०॥

घोरं पादसहस्रकं प्रकटयन्नाशासु भासां पति-
र्ध्वान्तं नो पुनरान्तरं शमयितुं शक्नोति शैलात्मजे! ।
त्वत्पादद्वितयेन कोमलतरेणानेन चेतःस्पृशा
जन्तूनां बहिरन्तरन्धतमसं कृन्तत्यनन्तं शिवे! ॥ ११॥

सुर्येन्द्वग्निसमीरणादिसकलस्वर्वासिनामुन्मदः
सर्वाण्येव पदानि यो मथितवान् दुर्वारशौर्योष्मणा ।
तं घोरं महिषासुरं निजपदेनैकेन सम्मृद्नती
यत्त्वं प्रत्यकृथास्ततः किमपरं त्वद्वैभवं ब्रूमहे ॥ १२॥

एकं वामतयैव, दक्षिणतयैवान्यत्पदं देहिनां
ख्यातं मुक्तिपुराधिवासिनि! शिवे!, चित्रं त्वयि त्वीदृशम् ।
आनम्रेषु जनेष्वभीष्टकरणे पादावुभौ दक्षिणा-
वानम्रे तु कृतागसि स्मरहरे वामाक्षि! वामावुभौ ॥ १३॥

आनम्रस्य पुरद्रुहः शिरसि ते पादाब्जपातः शिवे!
जीयाद्येन बभूव पङ्कजवती मौलिस्रवन्ती क्षणम् ।
किञ्चोदञ्चितबालपल्लववती जाता जटावल्लरी
लाक्षापातवशेन सान्ध्यसुषमासान्द्रा च चान्द्री कला ॥ १४॥

दृष्ट्वा रात्रिषु चन्द्रपादजनितां पाथोरुहाणां व्यथां
देवि! त्वं करुणाकुलेव कुरुषे तद्वैरनिर्यातनम् ।
मानानम्रमहेशमौलिवलभीवासस्य शीतत्विषो
नित्यं पङ्कजपादघातजनिता बाधा यदाधीयते ॥ १५॥

सम्भ्रान्तिस्तव देवि! सा विजयते मानावनम्रे शिवे!
त्वत्पादाम्बुरुहप्रहारमुदिते मन्दं समुत्थायिनि ।
लाक्षारागरसारुणं निपतितं गङ्गापयश्शीकरं
दृष्ट्वा शोणितशङ्कया तरलिता कान्तं यदालम्बथाः ॥ १६॥

सा पादद्वितयाहतिर्जयति ते, यस्यां गिरीन्द्रात्मजे!
प्राचीनेन्दुयुते नखेन्दुदशके मौलिस्थलीसङ्गते ।
स्वस्यैकादशमूर्तितासमुचितानेकादशैवोडुपा-
नाबिभ्राण इवाबभौ स भगवानेकोऽपि रुद्रः स्वयम् ॥ १७॥

किं वैरिञ्चकरोटिकोटिनिहतं किं वा फणिग्रामणी-
निश्वासानिलखेदितं न्विदमिति प्रेमार्द्रसल्लापिना ।
मानस्योपशमे करेण शनकैरामृद्रता शम्भुना
भूयश्चुम्बितमम्बुजद्युति पदं ध्यायामि माये! तव ॥ १८॥

पूर्वं जह्नुसुता सकृन्मुररिपोः श्रीपादसङ्क्षालना-
पुण्यादीदृशवैभवा समभवत्गोविन्दवन्द्ये! शिवे! ।
सेयं सम्प्रति शम्भुमौलिनिलया मानप्रसङ्गानतौ
नित्यं त्वच्चरणावसेचनभुवा पुण्येन कीदृग्भवेत्? ॥ १९॥

पूर्वं व्याकरणप्रपञ्चनविधौ लब्ध्वाप्यनेकं पदं
किं नो तृप्तिमगादगाधिपसुते! शेषः फणिग्रामणीः ।
आलीनः शशिमौलिमूर्द्धनि चिरं प्रेमप्रकोपानतौ
लब्धुं ते पदमेकमेव कुतुकी नित्यं यतो वर्तते ॥ २०॥

तिष्ठन्त्यां प्रणयप्रकोपवशतो बाष्पाकुलाक्ष्यां त्वयि
श्रीकण्ठे नखदर्पणप्रतिफलद्रूपे पुरोवर्त्तिनि ।
पादाग्रे पतितोऽयमित्यभिहिते सख्या, तवालोकनं
लोलं पादतले विभाति सहसा साकोपमालीमुखे ॥ २१॥

कान्तालोकनलज्जया विनमिते कान्ते मुखाम्भोरुहे
यासौ भूतलपातुका नयनयोः शोभा तवाभासते ।
सा तावत्तरुणारुणाम्बुजयुगभ्रान्त्या त्वदङ्घ्रिद्वय-
प्रान्ते भाति मरन्दपानकुतुकभ्रान्तेव भृङ्गावली ॥ २२॥

किं ब्रूमः कुटिलात्मकोऽपि कबरीभारस्त्वदीयः शिवे!
केलीविश्लथितस्तनोति यदयं त्वत्पादसंस्पर्शनम् ।

तत्भूयः सुमनोगणादृतगुणस्त्वन्मौलिसंलाल्यतां
धत्ते; चित्रमसौ, त्वदङ्घ्रिभजनात्किं केन नो लभ्यते? ॥ २३॥

रागद्वेषमुखा हि विभ्रमभरा नश्यन्ति विश्वेश्वरि!
त्वत्सङ्गादिति मुक्तिदेशनिलये! मिथ्या जनैः कथ्यते ।
उद्यद्द्वेषमुदारविभ्रमभरं गात्रं दधत्या त्वया
रागोऽपि ध्रियतेऽधिकं चरणयोः शोणाम्बुजच्छाययोः ॥ २४॥

देवि! त्वत्पदसत्परागमनिशं मौलौ समाबिभ्रतां
साधूनामपरागतैव भवतीत्याश्चर्यमास्तामिदम् ।
पादस्ते नखरप्रभावलसितो जागर्ति सोऽयं पुन-
श्चित्रं नाम खरप्रभावलसितो दुष्टासुरं पिष्टवान् ॥ २५॥

द्वित्वेन स्थितयोस्त्वदीयपदयोर्द्वैतं निरस्य स्फुटं
कैवल्यप्रतिपादने कुशलता जातेति कोऽयं क्रमः ? ।
किं वा युक्तिभिरत्र, मुक्तिकरता व्यक्तैव ते पादयो-
र्मुक्ता एव हि विस्फुरन्ति विमलास्तत्सङ्गिनोऽमी नखाः ॥ २६॥

पादाग्रं तव कामदं सुरलताशाखाग्रमाचक्ष्महे
जाता यत्र हि बालपल्लवरुचिः स्वैरेव रागोदयैः ।
उत्सर्पन्नखमण्डलीसुषमया पुष्पालिरुत्पादिता
सञ्जातालिरुतिश्च मञ्जुलतरैर्मञ्जीरशिञ्जारवैः ॥ २७॥

देवीयं तव सन्नतेशमकुटस्वर्लोककल्लोलिनी-
कल्लोलाहतिभिर्विशेषविमला जीयान्नखश्रेणिका ।
यद्भावल्यमवासुमात्तकुतुकास्तोये तपस्यन्त्यमी
दीनाः फेनकणाश्च मौक्तिकगणाः शङ्खाश्च शङ्कामहे ॥ २८॥

माने शम्भुशिरःप्रहारचरितं नैव त्वदिच्छाकृतं
जाने देवि! पदाब्जयोस्तु पुरजिन्मूर्द्ध्ना विरोधादिदम् ।
एते पादनखांशुबद्धकलहाः शीतांशुमन्दाकिनी-
भोगीन्द्राः किल शङ्करस्य शिरसा शङ्कां विना रक्षिताः ॥ २९॥

देवि! त्वच्चरणोच्चलन्नखघृणिश्रेणीषु लीनो नम-
न्नाभाति स्फटिकाचलस्फुटतटीशायीव सायन्नटः ।
हंसालीन इव स्वयं कमलभूः क्षीराब्धिशायीव च
श्रीभर्ता मघवापि नाकसरिति स्नायन्निवालोक्यते ॥ ३०॥

डोलाकेलिविधौ हिमाचलशिलादेशे समभ्याहतात्-
पादाग्रात्तव यानि यावकरसप्रस्यन्दनान्यम्बिके! ।
तान्यभ्यागतसुम्भसङ्गरभवद्रक्ताम्बुविस्तारणा-
बिन्दुक्षेपनिभानि नन्ददमरीवन्द्यानि वन्दामहे ॥ ३१॥

डोलाकेलिषु यं हिमाचलशिलालग्नं वनेवासिनो
भक्त्या योगिवरास्त्रिपुण्ड्रकलिते लिम्पन्ति फालान्तरे ।
यं सिद्धप्रमदाः समेत्य तिलकं कुर्वन्ति नत्वा मुहु-
स्तं दाक्षायणि! ते कदा नु पदयोरीक्षेय लाक्षारसम् ? ॥ ३२॥

देवि! त्वं मुरवैरिणः प्रणमने यत्किञ्चिदाकुञ्चय
श्रीपादाम्बूजमन्यथास्य शिरसि त्वत्पादलाक्षाञ्चिते ।
श्रीभूम्योरितरप्रणामकृतमित्यन्योन्यमाशङ्कया
रोषव्याकुलयोश्चिरं स भगवान् जायेत पर्याकुलः ॥ ३३॥

प्रागुद्वाहविधौ हिमाचलसदस्यश्माधिरोपाय य-
न्न स्प्रक्ष्यामि वियद्धुनीमिति पुनः सत्यं विधातुं च यत् ।
दैत्योत्क्षेपणसाहसे विरचिते संवाहनार्थं च यत्-
तत्पादग्रहणत्रयं विजयते शर्वेणि शर्वाणि! ते ॥ ३४॥

सुम्भस्ते किल देवि! रागकलहे पादप्रहारोत्सवं
लब्धुं काङ्क्षितवानुपायमिह खल्वज्ञो न विज्ञातवान् ।
यद्यायोत्स्यत घोरमाहिषवपुर्धारी स वैरी ततः
प्राघानिष्यत मूर्ध्नि कोमलरुचा पादारविन्देन ते ॥ ३५॥

आनम्रे गिरिशे पदप्रहरणे दत्ते भवत्या रुषा
``नाथे! किं महिषोहा"मित्यभिहिते देवेन तस्मिन् क्षणे ।
आलिष्वाकलितस्मितासु, पुनरप्युद्दामपुष्यद्रुष-
स्तन्मौलौ जयति द्वितीयमपि ते पादाब्जसन्ताडनम् ॥ ३६॥

पादाग्रं तव सङ्गरश्रमवशादाक्षारिलाक्षारसं
विन्यस्तं मृगनायकोपरि चिराज्जीयादगेन्द्रात्मजे! ।
यत्कान्त्यैव च लोहितो मृगपतिर्दैत्यप्रहारोद्गल-
द्रक्ताम्भःकणिका वहन्नपि तथा नामानि वैमानिकैः ॥ ३७॥

नैवालिम्प निलिम्पमूर्द्धसु, न वा सिंहोपरि त्यज्यतां
मा चेदं महिषस्य मूर्द्ध्नि रभसादालिप्य लोलुप्यताम् ।
पत्युर्मौलिनदीजले परमिदं सङ्क्षालनीयं त्वये-

त्यालीकेलिगिरो जयन्ति गिरिजे! त्वत्पादलाक्षार्पणे ॥ ३८॥

नत्वैव प्रथमं त्वदङ्घ्रिकमलं तौ पुष्पवन्तावुभौ
त्रैलोक्यं महसाभिभूय चरतो व्योमान्तरप्रान्तरे ।
नाथे! तौ कथमन्यथा परिगलल्लाक्षारसक्षालितौ
वीक्ष्येते भृशशोणिबिम्बमुदयारम्भे प्रियम्भावुकौ ॥ ३९॥

त्रैलोक्यं वशयन्ति, पापपटलीमुच्चाटयन्त्युच्चकै-
र्विद्वेषं जनयन्त्यधर्मविषये प्रस्तम्भयन्त्यापदः ।
आकर्षन्त्यभिवाञ्छितानि महिषस्ववैरिणो मारणा-
श्चित्रं! त्वत्पदसिद्धचूर्णनिवहाः षट्कर्मणां साधकाः ॥ ४०॥

किं कल्पद्रुमपञ्चकं प्रणमतामाकाङ्क्षितापादने
किं पञ्चायुधबाणपञ्चकमिदं मारारिसम्मोहने ।
सूक्ष्मं किञ्चन पञ्चभूतवपुषो विश्वस्य किं कारणं
त्वत्पादाङ्गुलिपञ्चकात्मकमिदं किं भाति शम्भोः प्रिये! ॥ ४१॥

डोलाकेलिषु दूरदूरगमने प्रेङ्खोलनाविभ्रमे
मेदिन्यामनिपातितं जयति ते नाथे! पदाम्भोरुहम् ।
भक्त्या सन्नमतां त्वदाननगलद्वानामृतामूर्च्छया
भूपृष्ठे चिरशायिनां दिविषदामाघट्टनासाध्वसात् ॥ ४२॥

मञ्जीरप्रसरन्मसारसुषमारूपा कलिन्दात्मजा
स्वच्छच्छायनखांशुसञ्चयमयी गङ्गा च सङ्गामुका ।
शोणः पादरुचां चयश्च मिलितो येन त्वदग्रे, ततो
मज्जन्तीव नमन्ति तत्र मुनयः सर्वेऽपि शर्वाङ्गने ॥ ४३॥

मञ्जीरार्पितशक्रनीलशकलश्रीचञ्चलीकाञ्चितं
राजद्रेणुविभूषितं परमहंसालीभिरासेवितम् ।
त्वत्पादाग्रसरोजमङ्गुलिदलच्छायभिराभासुरं
विष्वग्रोचिनखांशुजालपयसि स्वच्छे समुच्छोभते ॥ ४४॥

मञ्जीरस्वनमञ्जुविष्किररवे तत्सङ्गिनीलोपल-
च्छायारूपतमोलवे नखमिषादक्षीणतारागणे ।
सन्ध्यारागनिभस्वकान्तिपटले त्वत्पादमूलात्मक-
प्रत्यूषोपगमे हि देवि! लभते लोकः प्रबोधोदयम् ॥ ४५॥

विद्यामुक्तिरमावधूषु नितरां कामातुरा मानवा-

स्तप्तास्त्वन्नखकान्तिचन्दनरसैरालिप्य गात्रं निजम् ।
त्वत्पादाब्जरुचिप्रवालनिचिते भूमीतले शेरते
नित्यं देवि! भवत्कृपाप्रियसखीविश्वासतः केवलम् ॥ ४६॥

मञ्जीरक्वणितैः क्षिपन्निव मुहुः श्रीमन्नखांशूद्गमै-
र्दैत्येन्द्रं प्रहसन्निवारुणरुचा रुष्यन्निवास्मै भृशम् ।
धीरायां त्वयि निर्विकारमनसि त्वत्पाद एव स्फुटं
पुष्णन् वैरिविकारमेष महिषध्वंसी परित्रायताम् ॥ ४७॥

क्षिप्रं देवि! शिरस्पन्दने महिषं पिष्ट्वा ततोऽधः पदं
दित्सन्त्यां त्वयि कण्ठभञ्जनभिया कण्ठीरवे विद्रुते ।
मेदिन्यामपि भीतिकम्पिततनौ प्रेमत्वराशालिना
शर्वेणैव निजाङ्कसीम्नि निहितं पादद्वयं ते जयेत् ॥ ४८॥

पूर्वं देवि! पदाम्बुजेन महिषप्रध्वंसनाभ्यासतः
पश्चात्कुत्सितसुम्भदैत्यविजयोऽप्येवं कृतः किं त्वया? ।
नो चेद्भाति कथं कुसुम्भविजयी पादाब्जदेशोऽयमि-
त्यालापे गिरिशस्य तद्विजयते मन्दस्मितं देवि! ते ॥ ४९॥

बिभ्राणेन मनोज्ञयावकरसं मञ्जुध्वनन्नूपुर-
श्लेषालङ्कृतिशालिना नखमणीजातप्रसादश्रिया ।
एकेनैव पदेन देवि! महिषध्वंसे महीयस्तरः
श्लोकोयं रचितस्त्वयेति विबुधाः संश्लाघनं कुर्वते ॥ ५०॥

त्वं शम्भोर्महिषी भवस्यगसुते! तेनोपहासाय ते
दैत्योऽयां महिषीभवन्नुपगतः, सोऽयं कथं क्षम्यते ? ।
इत्थं नूपुरनिःस्वनैरिव वदन् पादस्त्वदीयो रुषा
शस्त्रप्रग्रहणात्पुरैव महिषं पिष्णन् परित्रायताम् ॥ ५१॥

देव्या पङ्कशयोऽद्य कोऽपि महिषच्छद्मा महान् कण्टकः
पादेनाहत इत्युदूढहसितं सख्या समावेदिते ।
सद्यः कण्टकशालिना करतलेनासाद्य पादाम्बुजं
गृह्णन्नार्तिविनोदनाय गिरिशो जीयात्प्रियस्ते शिवे! ॥ ५२॥

त्वत्पादाङ्गुलिपल्लवैरगसुते! देवि! स्वयं पञ्चभिः
पञ्चत्वं गमितो महासुर इति स्वात्मानुरूपं कृतम् ।
एतैरेव नतो जनस्त्रिदशतां नीतो, महेशः पुन-
र्लक्षत्वं गमितः प्रसूनधनुषो विस्मापनं तद्द्वयम् ॥ ५३॥

ब्राह्मं माधवनं च वाहनमहो मन्दैर्गतैर्निन्दितं
धावल्येन नखत्विषां विहसितो वाहोऽपि माहेश्वरः ।
इत्थं वाहनवैरितां भजति ते पादस्ततो मन्महे
कात्यायन्यमुना न्यघानि महिषः कार्त्तान्तवाहभ्रमात् ॥ ५४॥

सीमन्तप्रकरे सुरेन्द्रसुदृशां सिन्दूररेखात्मना
माणिक्यद्युतिसञ्ज्ञयैव मकुटीकोटीषु दैत्यद्रुहाम् ।
शम्भोर्मूर्ध्नि जटाघटारुणरुचिव्याजेन पादप्रभै-
र्वैका ते परिणाममेति करुणामूर्ते! गिरीन्द्रात्मजे! ॥ ५५॥

नो केशः परमाश्रयः सुमनसां, पादाब्जरेणुश्च ते
नो मन्दारसिता परं स्मितरुचिर्मञ्जीरयोश्च द्वयी ।
नो बाहुः कलहं समेत्य जयति, त्वद्यानलीलाप्यसौ
नो शुम्भत्तरलाक्षमाननमिदं, पादाम्बुजं चाम्बिके! ॥ ५६॥

नाथे! तावकवाहसिंहचकितास्त्वत्पादमूले नता
नूनं बभ्रमुरभ्रमुप्रियमुखा दिक्कुम्भिवीराश्चिरम् ।
नोचेदेष कथं तदुन्नतशिरस्सिन्दूरसन्दोहजो
रागस्ते चरणाम्बुजे परिणमन्नद्यापि विद्योतते ॥ ५७॥

त्वत्पादोऽयमजाश्रितश्च रुचिरस्पर्शान्वितो योगिना-
मन्तःस्थाकृतिरूष्मभाक् च महिषप्रध्वंसनप्रक्रमे ।
एवं खल्वखिलाक्षरात्मकममुं शैलेन्द्रकन्ये! कथं
भाषन्ते नतवर्गबन्धुमपवर्गालम्बनं वा जनाः? ॥ ५८॥

उन्मीलन्नखमण्डलीहिमकणः, शोणप्रभागैरिकं
बिभ्राणः, परिशोभमानकटको, भूयो वनैकाश्रयः ।
गायत्सिद्धवधूनिषेविततलः पादस्त्वदीयः शिवे!
राजत्येष हिमाद्रिपादवदिदं युक्तं हिमाद्रेः सुते! ॥ ५९॥

दिक्पालैर्दशभिः पृथक्पृथगयं त्वत्पादयोरर्पितो
दृश्यो भक्त्यनुराग एव दशधा शोणाङ्गुलिश्रीमिषात् ।
पादाभ्यामपि तान् प्रति प्रकटिता नूनं प्रसादाङ्कुरा
दृश्यन्ते नखकान्तिपङ्क्तिदशकव्याजेन शैलात्मजे! ॥ ६०॥

मेघानां कुलिशस्य चाप्रतिहता धाराः क्रमन्तां चिरं
नो नश्येन्मददानवारिविभवो नाकस्य नागस्य च ।

पुत्रोऽयं मम सैनिकाश्च दधतां नित्यं जयन्तः सुखं
त्वत्पादाम्बुजपातिनः सुरपतेरित्थं जयन्त्यर्थनाः ॥ ६१॥

आज्यासक्तकरैर्द्विजन्मभिरहं हूयेय, नो दानवैः
स्वाहारोचितमस्तु पार्श्वमनिशं, तादृक् च हव्यं लभै ।
रक्षावानिति भूतिमानिति च मे शब्दप्रसिद्ध्या शिवे!
नोपेक्ष्योऽहमिति त्वदङ्घ्रिनमने जीयासुरग्नेर्गिरः ॥ ६१॥

``त्वत्भक्ताघमबुद्धिपूर्वलिखितं स्याच्चेत्क्षमेथाः शिवे!
कान्तस्ते मयि रोषवान्, कुरु पुनस्तस्यार्द्रभावं शनैः ।
देवि त्वं महिषाभिहन्त्रि! चकितं त्रायस्व मे वाहनं",
कालस्येति जयन्ति ते पदनतौ लोलस्य सम्प्रार्थनाः ॥ ६३॥

धर्माचारपरोऽहमित्यवमतो रक्षोभिरेकान्वयै-
र्मह्यं देवि विनिन्दिता दिशमदुर्जातिद्विषश्चामराः ।
दैवादित्युभयच्युतो विशरणो रक्ष्योऽहमित्यादय-
स्त्वत्पादप्रणतौ जयन्ति निरृतेरत्याकुलाः प्रार्थनाः ॥ ६४॥

मत्पुत्र्या मम वा मुकुन्दगृहताभाग्यं न सङ्क्षीयतां
माहं पायिषि कुम्भजेन मुनिना कल्पान्तसूर्येण वा ।
द्वेधा मे सुरवाहिनीदयितता साधु त्वया रक्ष्यतां
त्वत्पादाम्बुजपातिनो जलपतेरित्थं जयन्त्यर्थनाः ॥ ६५॥

विश्वप्राणमयी त्वमेव, मम तु प्राहुर्जगत्प्राणतां
सर्वस्यापि सदा गतिर्हि भवती, मामेवमाहुर्जनाः ।
लज्जापादकमीदृशं जननि! नः, किं कुर्महे, पाहिमा-
मित्येवं पवनस्य ते पदनतौ वाचो जयन्त्याकुलाः ॥ ६६॥

शङ्खोल्लासिगलोज्ज्वले! समकरे! पद्मेन, कुन्दस्मिते!
पादाग्राददृतकच्छपे! मुखमहापद्मे! मुकुन्दाश्रिते! ।
इत्यस्मन्निधिगात्रि! नीलनयने! चर्चात्मिके! पाहिमा-
मित्थं पादनतिः शिवे! विजयते सख्युः कुबेरस्य ते ॥ ६७॥

सन्नामेषु भवत्पदाम्बुजनखच्छायां जटासङ्गिनीं
गङ्गेत्यालिजना वदन्ति वितथं मा भूर्मुधा कोपिनी ।
दृष्टिर्मय्ययि! नीयतां, परुषमप्येकं वचो दीयता-
मीशानस्य भवानि! ते पदनताविात्थं जयन्त्यर्थनाः ॥ ६८॥

नाभीतोऽभवमादितस्तव बलात् पश्चादभीतोऽस्म्यहं
त्र्यक्षेण त्रिमुखीकृतोऽपि चतुरास्योऽहं तवैव स्तवैः ।
त्वं विश्वात्मतयोपजन्य न पुनः स्रष्टारमाख्याहि मा-
मित्थं देवि! जयन्ति ते पदनतौ वाणीपतेर्वाणयः ॥ ६९॥

आशीरस्ति मुखे, विडम्बयति मां भूयोऽपि चाशीःस्पृहा
भोगाः सन्ति सहस्रधा, पुनरहं भोगान् कथं प्रार्थये? ।
शेषोऽहं स्पृहयाम्यशेषसुखमित्येतच्च हासास्पदं,
नाथे! चिन्तय सर्वमित्यहिपतेस्त्वत्पादपातो जयेत् ॥ ७०॥

पार्वत्याः पदमत्र दृश्यमिति वा पादे भवत्वेन वा
साधुत्वात्तदुपास्तये हिततया पद्यान्यमूनि स्फुटम् ।
सैषा मुक्तिपुरीगिरीन्द्रतनया भक्तेन नारायणे-
नाबद्धा खलु सप्ततिर्दिशतु वः कल्याणहल्लोहलम् ॥